*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942


**PD 153T RPS**

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक ( संस्कृत )** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन:** कनक शशि **सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत*, दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत*, संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर*, साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष*, संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक*, सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर*, व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक*, केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष*, संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष*, प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा कल्याण इन्टरप्राइज़ेज़, डी-20, सैक्टर बी-3, ट्रोनिका सिटी इंडस्ट्रियल एरिया, लोनी, गाज़ियाबाद (उ.प्र.) द्वारा मुद्रित।

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-380-3

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# मिल्याः केशाः



मिली



माता




मिल्याः केशाः दीर्घाः आसन्।
माता तस्याः केशैः वेणीद्वयं करोति स्म।
मात्रे मिल्याः वेणीबद्धाः केशाः अरोचन्त।







माता नित्यं मिल्याः केशेषु तैल-प्रसाधनं करोति स्म।
सा नित्यं तैल-प्रसाधनं कृत्वा मिल्याः वेणीद्वयं करोति स्म।
मिली वेणीबन्धनं न इच्छति स्म।





मिल्याः उन्मुक्तेषु केशेषु अभिरुचिः आसीत्।
सा प्रसृतेभ्यः केशेभ्यः स्पृहयति स्म।
सा अङ्गुलिभिः केशानां गुच्छानि रचयति स्म।



माता वेणीबन्धनं करोति चेत् मिली दुःखिता भवति।
सा दृढ़ं वेणीबन्धनं करोति स्म।
मिली बहु कष्टम् अनुभवति स्म।







मिली तर्कयति स्म यत् तस्या: केशा: त्रुटिता: भविष्यन्ति।
वेणीबन्धनकाले मिली चीत्कारं करोति स्म।
सा वारं वारं मातु: हस्तम् अपसारयति स्म।



मिली बहुवारं वेणीम् उन्मोचयति स्म।
सा उन्मुक्तैः केशैः भ्रमति स्म।
माता अति क्रुद्धा भवति स्म।







माता बन्धन–सूत्रेण बध्नाति चेत् मिली उन्मोचयति स्म।
सा तत् बन्धन–सूत्रं निस्सार्य क्षिपति स्म।
मिली बन्धन–सूत्रेण पुष्पाकृतिम् अपि रचयति स्म।




माता सन्दंशिकां संयोजयति चेत् मिली तां निस्सारयति स्म।

मिली सन्दंशिकां कीटीकृत्य क्रीडनकरूपेण क्रीडति स्म।

सा सन्दंशिकया निर्मिते कीटे बन्धनसूत्रं योजयित्वा इतस्ततः धावति स्म।





मिली उन्मुक्तान् केशान् इच्छति स्म।
माता सर्वदा एव वेणीबन्धनम् इच्छति स्म।
उभयोः नित्यं कलहः भवति स्म।





मिली मातुः उद्विग्ना आसीत्।
माता मिलीतः उद्विग्ना आसीत्।
उभे परस्परम् उद्विग्ने आस्ताम्।




एकस्मिन् दिने मिली प्रातःकालात् लुप्ता आसीत्।
मिल्याः पिता अपि गृहे न आसीत्।
माता उभौ बहु अन्विष्टवती।




मिली पित्रा सह विपणिम् अगच्छत्।
विपणौ जनसम्मर्दः आसीत्।
तौ एकम् आपणं गतवन्तौ।





मिली पिता च अपराह्ने विपणितः प्रत्यागच्छताम्।
मिली मातुः समीपं धावित्वा अगच्छत्।
सा अवदत् – “करोतु, अद्य मम वेणीबन्धनं करोतु।”



मिली केशान् कर्तयित्वा लघून् लघून् कारितवती।
माता विहस्य हस्तेन तस्याः केशान् अस्पृशत्।
सा मिलीम् आलिङ्गितवती।





अपरेद्युः माता मिल्याः केशेभ्यः किञ्चित् आनयत्।
प्रतिदिनम् इव सा मिल्याः केशेषु तैलप्रसाधनाय उपविष्टवती।
मिली सहर्षं तैलप्रसाधनं कारितवती।

